॥ श्रीवेङ्कटेशतूणकम् ॥

वज्रशङ्ख बाणचापचिह्नि ताङ्घ्रिपङ्कजं
नर्तितायुतारुणाग्य्निस्सरत्प्रभाकुलम् ।
वज्रपाणिमुख्यलेखवन्दितं परात्परं
सज्जनार्चितं वृषाद्रिसार्वभौममाश्रये ॥ १॥

पञ्चबाणमोहनं विरिञ्चिजन्मकारणं
काञ्चनाम्बरोज्ज्वलं सचञ्चलाम्बुदप्रभम् ।
चञ्चरीकसञ्चयाभचञ्चलालकावृतं
किञ्चिदुद्धतभ्रुवं च वञ्चकं हरिं भजे ॥ २॥

ma~NgalAdhidaivataM भुजङ्गमाङ्गशायिनं
सङ्गरारिभङ्गशौण्डमङ्गदाधिकोज्ज्वलम् ।
अङ्गसङ्गिदेहिनामभङ्गुरार्थदायिनं
तुङ्गशेषशैलभव्यशृङ्ग सङ्गिनं भजे ॥ ३॥

कम्बुकण्ठमम्बुजातडम्बराम्बकद्वयं
शम्बरारितातमेनमम्बुराशितल्पगम् ।
बम्भरार्भकालिभव्यलम्बमानमौलिकं
शङ्खकुन्ददन्तवन्तमुत्तमं भजामहे ॥ ४॥

पङ्कजासनार्चतं शशाङ्कशोभिताननं
कङ्कणादिदिव्यभूषणाङ्कितं वरप्रदम् ।
कुङ्कुमाङ्कितोरसं सशङ्खचक्रनन्दकं
वेङ्कटेशमिन्दिरापदाङ्कितं भजामहे ॥ ५॥

॥ इति श्रीवेङ्कटेशतूणकम् ॥